॥ एकश्लोकी ॥

किं ज्योतिस्तवभानुमानहनि मे रात्रौ प्रदीपादिकं
   स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।
चक्षुस्तस्य निमीलनादिसमये किं धीर्धियो दर्शने
   किं तत्राहमतो भवान्परमकं ज्योतिस्तदस्मि प्रभो ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ एकश्लोकी सम्पूर्णा ॥